# राधाकृतं श्रीकृष्णस्तोत्रम्

## राधिकोवाच

गोलोकनाथ गोपीश मदीश प्राणवल्लभ।
हे दीनबन्धो दीनेश सर्वेश्वर नमोऽस्तु ते॥
गोपेश गोसमूहेश यशोदानन्दवर्धन।
नन्दात्मज सदानन्द नित्यानन्द नमोऽस्तु ते॥
शतमन्योर्मन्युभग्न ब्रह्मदर्पविनाशक।
कालीयदमन प्राणनाथ कृष्ण नमोऽस्तु ते॥
शिवानन्तेश ब्रह्मेश ब्राह्मणेश परात्पर।
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्माबीज नमोऽस्तु ते॥
चराचरतरोर्बीज गुणातीत गुणात्मक।
गुणबीज गुणाधार गुणेश्वर नमोऽस्तु ते॥
आणिमादिकसिद्धीश सिद्धेः सिद्धिस्वरूपक।
तपस्तपस्विंस्तपसां बीजरूप नमोऽस्तु ते॥
यदनिर्वचनीयं च वस्तु निर्वचनीयकम्।
तत्स्वरूप तयोर्बीज सर्वबीज नमोऽस्तु ते॥
अहं सरस्वती लक्ष्मीदुर्गा गङ्गा श्रुतिप्रसूः।
यस्य पादार्चनान्नित्यं पूज्या तस्मै नमो नमः॥
स्पर्शने यस्य भुत्यानां ध्याने चापि दिवानिशम्।
पवित्राणि च तीर्थानि तस्मै भगवते नमः॥
इत्येवमुक्त्वा सा देवी जले संन्यस्य विग्रहम्।
मनः प्राणांश्च श्रीकृष्णे तस्थौ स्थाणुसमा सती॥१०॥
राधाकृतं हरेः स्तोत्रं त्रिसंध्यं यः पठेन्नरः।
हरिभक्तिं च दास्यं च लभेद् राधागतिं ध्रुवम॥११॥
विपत्तौ यः पठेद् भक्त्या सद्यः सम्पत्तिमाप्नुयात्।
चिरकालगतं द्रव्यं हृतं नष्टं च लभ्यते॥१२॥
बन्धुवृद्धिर्भवेत्तस्य प्रसन्नं मानसं परम्।
चिन्ताग्रस्तः पठेद् भक्त्या परां निवृतिमाप्नुयात्॥१३॥
पतिभेदे पुत्रभेदे मित्रभेदे च संकटे।
मासं भक्त्या यदि पठेत्सद्यः संदर्शनं लभेत्॥१४॥
भक्त्या कुमारी स्तोत्रं च शृणुयाद् वत्सरं यदि।
श्रीकृष्णसदृशं कान्तं गुणवन्तं लभेद् ध्रुवम्॥१५॥

*इति श्रीब्रह्मवैवर्ते राधाकृतं श्रीकृष्णस्तोत्रं सम्पूर्णम्।*

(श्रीकृष्णजन्मखण्ड २७।१००—११४)